श्रीगणेशायनमः श्रीदेव्युवाच देवदेवजगन्नाथज्ञानगूढ़कार
क॥ गुरोस्तत्त्वप्रदीपिकांवदसोमकलाधर॥१॥ गकारंचकथंदेवरेफं
तत्रचकीदृशं॥ उकारंचकथंदेववदमेकरुणानिधे॥२॥ मंत्रेचकीदृ
शंदेवकिंध्यानंकस्यपूजनं॥ कथंमनोलयंयातिदेवताकिंप्रसीदति
॥३॥ ईश्वरउवाच॥ अतिगोप्यंत्वयापृष्टंलोकतत्त्वंवरानने॥ अवाच्यम
पिवक्ष्यामितवस्नेहात्सुरेश्वरि॥४॥ वेदागमपुराणानितत्समानिव
हूनिच॥ तद्रहस्यंप्रवक्ष्यामिशृणुत्वंवरवर्णिनि॥५॥ मंत्राणांकोटि

कोटीनां तस्य पीठादिदेवताः ॥ तस्य तत्त्वं प्रवक्ष्यामि सिध्यंत्येव न संशयः ॥ ६ ॥ मंत्रमूलं गुरोर्वाक्यं पूजामूलं गुरोः पदं ॥ ध्यानमूलं गुरोर्मूर्तिर्मोक्षमूलं गुरोः कृपा ॥ ७ ॥ गकारं गगनाकारं रेफं तारकमद्भुयं ॥ उकारं त्वतीयं प्रोक्तं मोमितिज्योतिरूपकं ॥ ८ ॥ सर्वमंत्रस्वरूपस्य गवर्गीबीजमुच्यते ॥ रेफः शक्तिर्भवेत्तद्वदुकारः कीलकं स्मृतं ॥ ९ ॥ गकारं गगनाकारं रेफं तारकमद्भुयं ॥ उकारं तुरीयं प्रोक्तं चिंतयेद्भवशांतये ॥ १० ॥ एवं वर्णाश्च संयुक्ता अनुलोमादिलोमतः ॥ प्रतिलोमा

ता०
२

न्स्यान्नुच्चार्य सिध्यंत्येव न संशयः ॥११॥ ये ये काम मनुद्दिश्यत तज्ज्ञावोप
दिष्टये ॥ तत्तद्वर्णैश्च संयुज्येत्सर्वकार्यार्थसिद्धये ॥१२॥ जपेन्मंत्रं महाग्गो
प्यंत वस्नेन हात्वकीर्तितं ॥ रत्नाणि येप्रयत्नेन पिंडस्य जीवनं यथा ॥१३॥
सम्यग्ज्ञानाय शांताय गुरुभक्तिरताय च ॥ दातव्या चत्वयाविद्या इतरे
ण कदाचन ॥१४॥ श्रीदेव्युवाच ॥ देवानांदेव ईशान आदिमध्यांत वर्जि
तं ॥ तत्स्वरूपं रहस्यं च वद मे करुणानिधे ॥१५॥ गुणागुणस्वरूपाय नि
र्गुणाय गुणात्मने ॥ सकलं निष्कलं चैव ब्रूहि मे भक्तवत्सल ॥१६॥ ईश्वर उवा
च ॥ शृणु देवि प्रवक्ष्यामि रहस्यानामनुत्तमं ॥ जरामृत्युभयंशोकं स्मर

२६
२

णाद्बुद्धिर्नश्यति ॥१७॥ तारं पूर्वं समुद्धृत्य मन्त्रं दद्यादनंतरं ॥ मायानादं समु
द्धृत्य नयेद्दद्यादनंतरं ॥१८॥ अमृतं वीजसंयुक्तं अंते उकार एव च ॥ दद्यादिदं
व वाक्येन अमृतं सुदलंकृतं ॥१९॥ वायुवीजेन संयुक्तं मन्त्रं दद्यादनंतरं ॥
तद्बीजं पुनरुद्धृत्य एतन्मंत्रं प्रयोजयेत् ॥२०॥ तस्य रहस्यं पूजां च प्रवक्ष्यामि
विधानतः ॥ यस्य चार्चनमात्रेण तुष्टा भवंति देवताः ॥२१॥ अमूर्तिकं निराका
रं निर्विकल्पं निरामयं ॥ नित्यानंदं सदा पूर्णं सद्गुरुं तं नमाम्यहं ॥२२॥ एवं ध्या
त्वा गुरुं देवि कुर्यादावाहनादिकं ॥ आसनं पादुकां चैव अर्घ्यं पादोदकं तथा ॥
२३॥ स्नानालंकारणं चैव स्रग्वासादिविभूषणं ॥ अन्यानि राजचिह्नानि र

स्तो
३

द्यात्सर्वीशि देशिकैः॥२४॥वासनात्सर्वगंधानां सर्वभूतेषु संस्थितं॥ गंधाद्यर्थं
त्वविद्भ्यः पंस्कुगंधाद्युर्धं याम्यहं॥२५॥नित्यज्ञानप्रदीपाय निर्झेरसुखदायिने
॥ निर्विकल्पाय शांताय तस्मै श्रीगुरवे नमः॥२६॥ज्ञराज्ञरस्वरूपाय शां
ताय गुरुमूर्त्तये॥ अखंडमंडलं ध्यायेरज्ञंतं तद्दहाम्यहं॥२७॥वनस्पत्युद्भ
वो धूपो गंधाद्यो गंधउत्तमः॥कपूरागरुसंयुक्तः सुधूपं प्रतिगृह्यतां॥२८॥
नानारश्मिषु संभूतं सर्वलोकैकसाक्षिणं॥ व्यापकं सर्वभूतानां स्वयं ज्योतिर्द
दाम्यहं॥२९॥नैवेद्यं षड्रसोपेतं नानान्नरूपसमन्वितं॥ अमृतमयसंभूतं नैवेद्यं
प्रतिगृह्यतां॥३०॥आपो ब्रह्माणामित्याहुः सर्वबीजप्रकाशकः॥ रसमत्यो रसास्वा ३
दापोशानं प्रतिगृह्यतां॥३१॥हिरण्मयायं प्राणास्त्वाजंगमे हृदि संस्थितं॥

त्वं ज्ञोसि सर्वज्ञतानां चिद्रूपाहि सदाशिवः ॥ ३२ ॥ अपवित्रोति शुद्धात्मा आपो वा
र ण संस्थिताः ॥ अग्निः शुचेति विज्ञात्मा च मनीयं प्रतिगृह्यतां ॥ ३३ ॥ मनो ज्यो
तिश्च येब्रह्मन्निर्विकल्पे स्वतेजसि ॥ सर्वे तिमिर हरणं नीराज्यं प्रतिगृह्यतां ॥
३४ ॥ चिंतामणि मनंतो यं सर्वलोकैक साक्षिणं ॥ गुरु रूपधरं देवं प्रणम्य पुरु
षोत्तमे ॥ ३५ ॥ सर्वाय सर्वरूपाय सर्वकर्म साक्षिणे ॥ सर्व हृदि निवासाय सर्वे
सर्वे जायन मोस्तुते ॥ ३६ ॥ त्रैलोक्य पूजितं पादं त्रिशक्ति गुणधारिणे ॥ त्रिमि
र्मूर्त्तिं रूपाय त्रिमित्तत्वात्मने नमः ॥ ३७ ॥ उरसा शिरसा चैव हस्तपादस मन्वि
तं ॥ मनसा कर्मणा वाचा श्री गुरुं प्रणमाम्यहं ॥ ३८ ॥ एवं प्रणम्य देवेशियद्दीप्सा

स्व०९

नी
४

प्राप्यकामया॥ तस्मिंस्तुष्टे जगत्तुष्टिर्भवत्येव न संशयः॥ ३९॥ श्रीदेव्युवाच
॥ आदिनाथाय देवाय देवासुरासुरनमस्कृत॥ रहस्यस्य स्थानपूजां च वद मे त्वं
कृपानिधे॥ ४०॥ यस्य यस्य स्थाने यद्यच्च कृत्यं पूजां तु विष्टदेवतां॥ कृपया वद मे
देव चरणं चिंतयाम्यहं॥ ४१॥ ईश्वर उवाच॥ शृणु नाम्नि नित्त्वेन प्रवक्ष्या
मि यथाविधि॥ न्यासपूजानुसंधानं प्रकारं शृणु नायिके॥ ४२॥ सप्तद्वीपं
च भुवनं सप्त ब्रह्माण्डसागराः॥ इंद्रादिदेवताः सर्वा यच्छरीरे वसंति च॥ ४३॥
जंघायां च पूजिते देवि पूजिताः सर्वदेवताः॥ उपेंद्रवरुणाग्निश्च नरवागेषु च
तिष्ठंति॥ ४४॥ पादे परिद्रुमाः सर्वे गुल्फयोर्नागदेवताः॥ जान्वोश्च क्षेत्र
पालश्च देव जंघयोर्भैरवादयः॥ ४५॥ आधारे पत्नि शक्तिश्च पूजयेदुत्त ४

मास्थितिः ॥ स्वाधिष्ठाने च देवेशि जगद्योनिः पितामहः ॥४६॥ स्वं पूजये
त्स्वशक्त्या च निर्गुणो सर्वभावनं ॥ कल्लोलाः सागराः सर्वे सप्तद्वीपा वसुंधरा
॥४७॥ एकविंशच्च ब्रह्मांडा नाभिमध्ये वसंति च ॥ नाभौ पूज्यं च यत्नेन दे
वदेवं चतुर्भुजं ॥४८॥ इंद्रादिदेवताः सर्वाः स्थिता भवंति योगिनः ॥ हृदये प्रा
णमीशानं परमात्मा सदाशिवः ॥४९॥ पंचवक्त्रं महादेवमुमया सहितं शि
वे ॥ कंठे च मातरः सर्वा जीवविद्यासमन्विताः ॥५०॥ त्रिलोकपीठमास्थाय
योजयेत्तु रुपोत्तमं ॥ सप्तकोटिमहामंत्राः तन्मूले च तालुके ॥५१॥ जिह्वाग्रे
वैखरी प्रोक्ता चिबुके वर्णमाश्रिताः ॥ चंद्रसूर्यद्वयोर्नेत्रे करोति च अधिदेवता ॥५२॥
क्रवोर्मध्ये महाप्राणं नंदविंदुं समर्चयेत् ॥ मंडले न्यस्यते देवि ब्रह्मा विष्णुर्वयं पुनः ॥५३॥

गी पंक्तिभिर्वेसृतेन च चतुःषष्टिगृहेषु च ॥ चतुःषष्टिश्च मध्ये च देवी चैवैकसंस्थिताः
५ ॥५४॥ प्रकृतिश्च स्वशक्तिश्च शिवशक्त्या समन्विताः ॥ नाहं च चर्चिता ब्रह्मा न वै
वचोर्चितो हरिः ॥५५॥ मूलाधारकपदद्वंद्वं मस्तकेन्दुविराजिता ॥ शांभवस्थानयो
मध्ये तस्मै श्रीगुरुपादुकां ॥५६॥ एवं प्रपूज्य देवेशि यदिच्छेदिष्टकाम्यया ॥
अन्यथा निष्फलं याति गुरुपादार्चनं विना ॥५७॥ धर्मार्थकाममोक्षाणां आधि
पं च गुरुः स्मृतः ॥ तस्य संतुष्टिमात्रेण सर्वकार्यार्थसिद्धिदः ॥५८॥ गुरुमूलाः
शक्ति ७ क्रियाः सर्वा भुक्तिमुक्तिफलप्रदाः ॥ तस्मात्सेव्यो गुरुर्नित्यं भुक्त्यो येषु फलप्रदाः ॥५९॥
गुरुनिष्ठां च पूजां च कर्तव्या च दिने दिने ॥ परां गतिमवाप्नोति यत्सुरैरपि दुर्लभं ॥ ५
६० निमिषं निमिषार्धं वा न इष्टमानं संस्मरेत्तु ॥ स एव पतितो ज्ञेयः सत्यं सत्यं व
दाम्यहं ॥६१॥ नित्यज्ञानप्रदीपाय निर्वैरसखदयाय ते ॥ निर्विकल्पाय शांताय

तस्मै श्रीगुरवे नमः ॥६२॥ अरात्मर स्वरूपाय शांताय गुरुमूर्तये ॥ आनंदैकरसानंदे
तस्मै श्रीगुरवे नमः ॥६३॥ बोधाय बोधरूपाय शब्दमायाधराय च ॥ नादबिंदुस्वरू
पाय तस्मै श्रीगुरवे नमः ॥६४॥ इच्छा ज्ञान क्रिया शक्ति गुरुदेहे वसंति च ॥ इति र
हस्यं महादेवि सिद्धि मुक्तं ग्रंथकोटिभिः ॥६५॥ अति गोप्यं रहस्यं च न देयं यस्य कस्य
चित् ॥ गुरुभक्ताय दातव्यं अन्यथा न कदाचन ॥६६॥ शठाय वंचकाय न दातव्यं यद्यपि व
स्नसहृशो ॥ श्रीदेव्युवाच ॥ अहो नाथ परं ज्योति रूपयानवतारक ॥६७॥ यज्ञोप्य
मस्ति लोके व तत्सर्वं चवद स्वमे ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि तव स्नेहा
त्सकीर्तितं ॥६८॥ गोपनीयं प्रयत्नेन पिंडस्य जीवनं यथा ॥ गुरोर्नाम गृणात्तस्य सर्वे
देवाश्च वल्लभाः ॥६९॥ मंत्रवीर्यं च विज्ञेयं सत्यं सत्यं वदाम्यहं ॥ इच्छाज्ञानक्रियाश
क्ति यस्य वाक्यात्समुद्भवः ॥७०॥ स्वयमेव महादेवो गुरुरित्यक्षरद्वयो ॥ हितानंदस

गीता

६

ये१

पद्मपायद्वैतज्ञानस्वरूपिणे ॥७१॥ द्वैताद्वैत महादेव शांतं गुरुमूर्तये ॥ अमूर्तिं च नि
राकारं निर्विकल्पं निरंजनं ॥७२॥ अतीव दिनि योगेषु ध्यातायगुरवे नमः ॥ रुकु
पीठं जगत्सर्वं मे मेरुमुद्राच खेचरी ॥७३॥ मकारश्च महामंत्रो गुरुरित्यक्षरद्वयं ॥
सर्वं मंत्रस्वरूपाय निर्गुणाय गुणात्मने ॥७४॥ स्वयं चाहमखिलं ध्यायेत्तस्मै श्री
गुरवे नमः ॥ शब्दब्रह्मस्वरूपाय निःसंगाय गुणात्मने ॥७५॥ आत्मानमखि
लं ध्यायेत्तस्मै श्रीगुरवे नमः ॥ सच्चिदानंदरूपाय हरये परमात्मने ॥७६॥ वारंवा
रं किमुक्तेन ग्रंथ्यविस्तरपूर्वकं ॥ रहस्यं च महाभागो व्यंजनाचार्यसद्गुरवीन्न वेत्त
॥७७॥ इति श्री विश्वसारोद्धारे उमामहेश्वरसंवादे गुरुरहस्ये गुरुपूजाविधानं
नाम स्तोत्रं समाप्तं ॥ शुभमस्तु ॥ १ ॥ ॥ ॥ ॥ ॥